# वासिष्ठी हवन पद्धति



खेमराज श्रीकृष्णदास प्रकाशन, बम्बई

# वासिष्ठी हवन पद्धतिः ।

जयपुरनिवासी राजमान्य श्रीहनुमानशर्मकृत

## भाषाटीकासहिता ।



खेमराज श्रीकृष्णदास प्रकाशन बम्बई

संस्करण : जून २०१८, संवत् २०७५

मूल्य : ७० रुपये मात्र।

मुद्रक एवं प्रकाशकः
खेमराज श्रीकृष्णदास,™
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
मुंबई - ४०० ००४.



Printers & Publishers :
Khemraj Shrikrishnadass,
Prop: Shri Venkateshwar Press,
Khemraj Shrikrishnadass Marg, 7th Khetwadi,
Mumbai - 400 004.

Web Site : http://www.Khe-shri.com
Email : khemraj@vsnl.com

Printed by Sanjay Bajaj For M/s. Khemraj Shrikrishnadass Proprietors Shri Venkateshwar Press, Mumbai - 400 004, at their Shri Venkateshwar Press, 66 Hadapsar Industrial Estate, Pune 411 013.

# प्रस्तावना ।



राजपूताना प्रान्तमें जिस प्रकार शान्ति पुष्ट्यादिमें ग्रहशान्तिका अधिक प्रचार है उसी प्रकार मालवा, बराड़ आदिमें 'वासिष्ठी हवनपद्धति' का विशेष प्रचार है । इस लिये अनेक कर्मकाण्डके ग्रन्थोंके आधारसे सप्रमाण यह वासिष्ठी हवनपद्धति सुन्दर बड़े टाईपमें उद्धृत की । किन्तु अबतक यह मूलमात्र थी जिससे सर्व साधारण कर्मकाण्डी काम करते हुए कई जगह अटक जाते थे, अतएव अब उनके उपकारके निमित्त इसकी इतिकर्तव्यता सरल हिन्दी भाषामें की गई, जिससे अब साधारणसे साधारण कर्मकाण्डी भी अपना कार्य सहजहीमें चला सकते हैं । तथापि जहां कहीं कुछ विशेष कठिनता प्रतीत हुई वहां उसे विस्तारसे बतला दी है और कौन काम किस २ प्रकार करना चाहिये यह सुगमतासे समझा देनेकी ओर भी

विशेष ध्यान दिया गया है। ऐसी सरल करनेसे अब कोई त्रुटि अथवा शंका रहनेका संभवही नहीं रहा। ऐसी यह सुन्दर पुस्तक परोपकारी धर्मरत्न श्रीमान् सेठ खेमराज श्रीकृष्णदासजी " श्रीवेङ्कटेश्वर " प्रेसाध्यक्षको सर्वाधिकार समेत छापनेको दी गई है। इसकी बारंबार मांग आनेसे मुझे बड़ा ही आनन्द होता है कि कर्मकाण्डी लोग इसे बहुत ही पसन्द कर अपना रहे हैं, आशा है जिस प्रकार मेरे परिश्रमको सफल कर अपना लाभ उठा रहे हैं, आगे भी इसी प्रकार सब कर्मकांडी अनुगृहीत करते रहेंगे।

हनुमान शर्मा,
जयपुर सिटी.

॥ श्रीः ॥

# वासिष्ठीहवनपद्धतिः ।



## भाषाटीकासहिता ।

तत्रादौ प्रतिज्ञासङ्कल्पः॥ ॐविष्णुर्विष्णुर्विष्णुः। ॐनमः परमात्मने श्रीपुराणपुरुषोत्तमाय। श्रीपरमेश्वराज्ञया अद्य ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमचरणे जम्बूद्वीपे भारतवर्षे भरतखण्डे

अब वासिष्ठी हवनपद्धती कहते हैं--जन्म वर्ष मास, दिन, गोचर, और रेखाष्टक वर्गादिमें जब कभी अनिष्ट ग्रह हों या राजभय आदिकी सम्भावना हो तो ग्रह यज्ञसे वह अनिष्ट दूर होता है। यहां उसी ग्रहयज्ञका विधान बतलाते हैं--संभावित दोष दूर करनेके लिये जब कभी ग्रहयज्ञ करना हो तब यज्ञभूमिमें वस्त्र निर्मित मण्डप बनावे। यदि वस्त्रनिर्मित न हो तो अन्य वस्तुसे आच्छादन करे और शुभ दिनमें कर्त्ता

आर्यावर्तांतर्गतब्रह्मावर्तैकदेशे आनन्दवने अविमुक्तवाराणसीक्षेत्रे गौरीमुखे त्रिकंटकविराजिते विक्रमशके बौद्धावतारे वर्तमाने यथानामसंवत्सरे अमुकायने महामाङ्गल्यप्रदे मासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकर्क्षे अमुकराशिस्थिते सूर्ये अमुकराशिस्थितेषु चन्द्रभौमबुधगुरुशुक्रशनिषु शुभनाम योगे शुभकरणेएवंगुणशेषणविशिष्टायां शुभपुण्यतिथौसकलश्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामः अमुकगोत्रोत्पन्नः अमुकशर्माऽहं ममात्मनः सपुत्रबांधवस्य नवग्रहानुग्रहद्वाराग्रहकृतराजकृतसर्वविधपीडानिवृत्तिपूर्वकनैरुज्यदीर्घायुः पुष्टिधनधान्यसमृद्ध्यर्थं नवग्रहमखेनयक्ष्ये ॥ इति सङ्कल्पः॥१॥

अथ वरणम् -पटमंडादिकरणं तदभावेऽन्येनाच्छादनम् --ततः स्वस्तिवाचनम् ॥ ॐ स्वस्नानादि नित्यक्रिया करके पूर्वाभिमुख बैठकर जिस निमित्त यज्ञ करना हो उसीका संबोधन करके उपरोक्त “ विष्णुर्विष्णुर्विष्णुः०” आदिके उच्चारणसे प्रतिज्ञा

स्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्व वेदाः ॥ स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नोबृहस्पतिर्दधातु ॥ १ ॥ पृषदश्वामरुतः पृश्नि मातरः शुभं यावानोविदथेषु जग्मयः ॥ अग्नि-जिह्वा मनवःसूरचक्षसो विश्वेनोदेवाऽअवसागम-न्निह ॥ २ ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः॥ स्थिरैरंगैस्तुष्टुवाꣳसस्तनू-भिर्व्यशेमहि देवहितं यदायुः॥३॥ शतमिन्नुशर-दोऽअन्ति देवायत्रा नश्चक्राजरसंतनूनाम्। पुत्रासो यत्र पितरो भवन्ति मानो मध्यारीरिषतायुर्ग-न्तोः ॥४॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ॥ विश्वेदेवा अदितिः पंचजना

संकल्प करे ॥१॥ इसके पीछे 'ॐस्वस्तिनऽइन्द्रो०पृष-दश्वामरुतः, भद्रंकर्णेभिः०, शतमिन्नु०, अदितिर्द्यौ०, दीर्घायुत्वाय० द्यौःशांति०, इन मंत्रोंका पाठ करे ॥२॥ इसके अनंतर गणेशादिक पूजनकरके फिर पुण्याहवाचन अग्निस्थापन और ग्रह स्थापनादि कर्म करे। अब पुण्या-

ऽअदितिर्जातमदितिर्जनित्वम् ॥५॥ दीर्घायुत्वाय बलाय वर्चसे सुप्रजास्त्वायसहसा अथो जीवशरदश्शतम् ॥६॥ ॐ द्यौः शांतिरन्तरिक्ष ᳪ शांतिः पृथिवी शांतिरापः शांतिरोषधयः शांतिर्वनस्पतयः शांतिर्विश्वेदेवाः शांतिर्ब्रह्म शान्ति सर्व ᳪ शांतिः शांतिरेव शांतिः सा मा शांति रेधिसुशांतिर्भवतु ॥७॥ इति स्वस्तिवाचनम्॥२॥

अथ पुण्याहवाचनम्--तत्रादौ ब्राह्मणकरे -शिवा आपः संतु । ब्राह्मण वचनम् । सौमनस्यमस्तु ॥ एवम् अक्षताः पांतु । मांगल्यमस्तु ॥ पुष्पाणि पांतु । श्रीरस्तु ॥ तांबूलानि पांतु । ऐश्वर्यमस्तु॥ दक्षिणाः पांतु । आरोग्यमस्तु ॥ दीर्घायुः शांतिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो बहुपुत्रं बहुधनं चास्तु ॥ ३ ॥ यं कृत्वा सर्ववेदयज्ञक्रियारम्भाः

हवाचन कहते हैं। पहले यजमान ब्राह्मणके हाथमें जल अक्षत पुष्प तांबूल और दक्षिणा दे और 'शिवाआपःसंतु आदिका प्रत्येक वस्तुके साथ उच्चारण करे । साथ ही उत्तरमें ब्राह्मण लोग 'सौमनस्यमस्तु'आदि कहें ॥ ३ ॥

शोभनाः प्रवर्तन्ते तमहमोंकारमादिकृत्वाऋग्यजुः सामाथर्वणाशीर्वचनंबह्वर्षिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये ॥ वाच्यतामिति ब्राह्मणवचनम् ॥ पुनः यजमानो ब्रूयात् ॥ व्रत-निमम-तपस्स्वाध्याय-क्रतु-दमदान-विशिष्टानां सर्वेषां ब्राह्मणानांमनः समाधीयताम्।ब्राह्मणाः समाहितमनसः स्मः ॥ यजमानो ब्रूयात् । प्रसीदन्तु भवंतः । ब्राह्मणाः प्रसन्नाः स्मः ॥४॥ ततो यजमानः अवनिकृतजानुमण्डलः कमलमुकुलसदृशमंजलिं शिरस्याधाय दक्षिणेन पाणिना जलपूर्णं सुवर्णकलशं धारयित्वा भूमौस्थापिते पात्रद्वये प्रथमपात्रे किंचिदुदकं पातयेत् । तत्र

फिर यजमान 'यं कृत्वा सर्ववेद०'का उच्चारण करे और ब्राह्मण लोग 'वाच्यताम्' कहें, फिर यजमान व्रतनियमादिवाक्यका उच्चारण करे और ब्राह्मणलोग 'समाहितमनसःस्मः,कहें।फिर यजमान 'प्रसीदन्तु भवंतः'कहे और ब्राह्मण लोग 'प्रसन्नाःस्मः'कहें॥४॥इसके पीछे यजमान अपने जानुमण्डल(दोनों गोडों)कोभूस्पर्श करके (ऊकडू)

ब्राह्मणा वदेयुः—ॐशांतिरस्तु। पुष्टिरस्तु। वृद्धि-
रस्तु। ऋद्धिरस्तु। अविघ्नमस्तु। आयुष्यमस्तु।
आरोग्यमस्तु। शिवमस्तु। शिवं कर्मास्तु। कर्म
समृद्धिरस्तु। पुत्रसमृद्धिरस्तु। वेदसमृद्धिरस्तु
शास्त्रसमृद्धिरस्तु। धनधान्यसमृद्धिरस्तु। इष्ट
संपदस्तु। अरिष्टनिरसनमस्तु। यच्छ्रेयस्तदस्तु
ततः द्वितीयपात्रेपातयेत्। यत्पापमशुभमकल्याणं
तद् दूरे प्रतिहतमस्तु। पुनः प्रथमपात्रे पातयेत्।
उत्तरोत्तरे कर्मण्यविघ्न रस्तु। उत्तरोत्तरमहरह
रभिवृद्धिरस्तु। उत्तरोत्तराः क्रियाःशुभाःशोभनाः
संपद्यताम्। तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः
प्रीयंताम्। तिथिकरणे सुमुहूर्ते सुनक्षत्रेसुग्रहे सुदै-
वते प्रीयताम् अग्निपुरोगा विश्वेदेवाःप्रीयंताम्
इंद्रपुरोगा मरुद्गणाः प्रीयंताम्। माहेश्वरी पुरोगा
बैठकर खिले हुए कमलके फूलकी भाँति अपने हाथोंका
अंजली करके उसमें जलपूर्ण सुपूजित कलश स्थापन
करके दहने हाथसे उसे शिरोधार्य करे और इस अव-
सरमें ब्राह्मण लोग यजमानके सन्मुख दो पात्र रखकर

उमामातरः प्रीयंताम्। वसिष्ठपुरोगा ऋषिगणाः प्रीयंताम्। अरुंधतीपुरोगा एकपत्न्यः प्रीयंताम्। ब्रह्मपुरोगाः सर्वे वेदाःप्रीयंताम्। विष्णुपुरोगाः सर्वे देवाः प्रीयंताम्। ऋषयश्छंदांस्याचार्या वेदा देवा यज्ञाश्च प्रीयंताम्। ब्रह्मच ब्राह्मणाश्च प्रीयंताम्। अम्बिकासरस्वत्यौ प्रीयेताम्। श्रद्धामेधे प्रीयेताम्। दुर्गापांचाल्यौ प्रीयेताम्। भगवती कात्यायनी प्रीयताम्। भगवती माहेश्वरी प्रीयताम्। भगवती ऋद्धिकरी प्रीयताम्। भगवती वृद्धिकरी प्रीयताम्। भगवती पुष्टिकरी प्रीयताम्। भगवती तुष्टिकरी प्रीयताम्। भगवन्तो विघ्नविनायकौ प्रीयेताम्।सर्वाः कुलदेवताःप्रीयताम्। सर्वा ग्रामदेवताः प्रीयंताम्! सर्वइष्टदेवताः प्रीयंताम्। पुनः द्वितीयपात्रे पातयेत्। हताश्च ब्रह्मद्विषः। हताश्च

प्रथम पात्रमें दूर्वांकुरोंसे 'शांतिरस्तु०' आदिके उच्चारणसे जल छोड़े और दूसरे पात्रमें 'यत्पापं' से जल छोड़े इसी प्रकार 'उत्तरोत्तरे कर्मण्यविघ्नमस्तु' इत्यादिसे प्रथम पात्रमें और 'हताश्च ब्रह्मद्विषः' इत्यादिसे दूसरे पात्रमें

परिपन्थिनः । हताश्च विघ्नकर्तारः । हताश्च विघ्न कर्त्र्यः ! शत्रवः पराभवंयांतु । शाम्यंतु घोराणि । शाम्यन्तु पापानि । शाम्यन्त्वीतयः । पुनः प्रथमपात्रे पातयेत् । शुभानि वर्द्धन्ताम् । शिवा आपः संतु । शिवाऋतवःसन्तु । शिवाः अग्नयः संतु । शिवा आहुतयः सन्तु शिवा वनस्पतयः सन्तु । शिवा अतिथयः संतु । अहोरात्रे शिवेस्याताम् । निकामे निकामे नः पर्ज्यन्योवर्षतु फलवत्यो न ओषधयः पच्यंताम् । योगेक्षेमो नः कल्पताम् । शुक्रांगारकबुधबृहस्पतिशनैश्चराहुकेतुसोमादित्यरूपाः सर्वे ग्रहाः प्रीयंताम्।भगवान्नारायणःप्रीयताम् । भगवान् पर्जन्यःप्रीयताम् । भगवान् स्वामी महासेनःप्रीयताम्।पुरोनुवाक्यया यत्पुण्यं तदस्तु । याज्यया यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यंतदस्तु।प्रातःसूर्योदये यत्पुण्यं तदस्तु॥८॥ ततो यजमानः सुवर्णकलशं भूमौनिधाय जल छोड़े ।तत्पश्चात् 'शुभानि वर्धन्ताम्' आदिसे 'प्रातः सूर्योदये' पर्यन्तके उच्चारणसे फिर प्रथम पात्रमें

प्रथमपात्रपातितजलेन शिरः संमृज्य सपरिवार-गृहांश्चाभिषेचयेत् ॥ द्वितीयपात्रजलमेकांते पातयेत् ॥६॥ यजमानो ब्रूयात् । ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं पुण्यं तत्पुण्याहं ब्रुवन्तु नः।भो ब्राह्मणाःमम सपरिवारस्यगृहे पुण्याहं भवंतो ब्रुवन्तु (ब्राह्मणाः) ॐपुण्याहम् ३ पुनंतु मा देवजनाः पुनंतु मनसाधियः । पुनंतुव्विश्वा भूतानि जातवेदः पुनीहि मा॥ ( यजमानः ) पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम्।ऋषिभिः सिद्धगंधर्वैस्तत्कल्याणंब्रुवंतुनः । भो ब्राह्मणाः मम सपरिवारस्य गृहे कल्याणं भवन्तो ब्रुवंतु । जल छोडे ॥ ५ ॥ इसके पीछे यजमान उस सुपूजित कलशको पृथ्वीपर रखदेवे और ब्राह्मण लोग प्रथम पात्रके जलसे सपरिवार यजमानको अभिषेक करे। और द्वितीय पात्रके जलको कहीं एकान्तमें पटके दे ॥६॥ फिर यजमान ब्राह्मं पुण्यं०, का उच्चारण करके हाथ जोड़कर ब्राह्मणोंसे कहे कि, ब्रह्मणो ! सपरिवरा मेरे घरमें पुण्यदिन हो ऐसा आप कहें, तब ब्राह्मण

( ब्राह्मणाः ) ॐ कल्याणम् ॥ ३ ॥ यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्याᳫं शूद्राय चार्याय च स्वाय चारणाय च ॥ प्रियो देवानां दक्षिणायै दातु रिह भूयासमयं मे कामःसमृद्ध्यतामुपमादो नमतु ॥ यजमानः ) सागरस्य च या लक्ष्मीर्ममहालक्ष्म्यादिभिः कृता । संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवंतु नः । भो ब्राह्मणाः मम सपरिवारस्य गृहे ऋद्धिं भवंतो ब्रुवंतु ॥ ( ब्राह्मणाः ) ॐऋद्ध्यताम्३। सत्रस्य ऋद्धिरस्य गन्मज्योतिरमृताऽअभूम ॥ दिवं पृथिव्याऽअद्ध्या रुहामाविदामदेवान्त्स्वर्ज्योतिः ॥ ( यजमानः ) स्वस्त्यस्तु ह्यविनाशाख्यानित्यंमंगलदायिनी । विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवंतु नः॥भो ब्राह्मणाःमम सपरिवारस्य गृहे स्वस्ति भवंतो ब्रुवंतु ( ब्राह्मणाः ) ॐ स्वस्ति ३ । स्वस्तिनऽइंद्रो वृद्ध लोग 'पुण्याहम्' ३ वार कहें । इसी प्रकार यजमान कल्याण, ऋद्धि, स्वस्ति और लक्ष्मीके लियेभी ब्राह्मणोंसे कहे और वे उत्तरमें'कल्याणम्' 'ऋद्ध्यताम्'

श्रवाः स्वस्तिनः पूषाविश्ववेदाः । स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ ( यजमानः ) समुद्रमथनाज्जाता जगदानंदकारिका ॥ हरिप्रिया च मांगल्या तां श्रियं च ब्रुवंतु नः ॥ भो ब्राह्मणाः मम सपरिवारस्य गृहे श्रीरस्त्विति भवंतो ब्रुवंतु । (ब्राह्मणाः)ॐअस्तुश्रीः३॥ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनो व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥ ततस्तिलकाशीर्वादः ॥ अथ दक्षिणादानम् ॥ ॐ अद्य पुण्याहवाचनसांगतासिद्ध्यर्थं पुण्याहवाचकेभ्यो नानानामगोत्रेभ्यो ब्राह्मणेभ्य इमां यथाशक्ति हिरण्यदक्षिणां संप्रददे ॥ इति पुण्याहवाचनम्॥७॥अथ वरणम् । पूर्वमाचार्यस्य वरणं पश्चात्सर्वेषां वरणम् ।

'स्वस्ति 'अस्तु श्रीः' ऐसा बार२कहे । अर्थात् यह हो यह कहदें । इसके पीछे तिलक आशीर्वाद और दक्षिणा दान करके पुण्याहवाचन समाप्त करे ॥७॥ इसके पीछे

तद्यथा—आचार्यं प्रति यजमानो ब्रूयात्--अस्मिन्नासने आस्यताम् ॥ आचार्यो ब्रूयात्--आस्ये ॥ ततो यजमानः--नमोऽस्त्वनंतायेति मंत्रेण पादप्रक्षालनं कुर्यात् ॥ नमोऽस्त्वनंताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ १ ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ २ ॥ गंधमाल्यादिभिरभ्यर्च्य ॐ युञ्जन्ति ब्रध्नमरुषं चरंतपरितस्थुषः ॥ रोचंते रोचना दिवि ॥ युंजंत्यस्य काम्या हरीविपक्षसारथे ॥ शोणाधृष्णू नूवाहसा ॥ १ ॥ ॐ अद्येत्यादिनवग्रहमखहोमकर्म कर्तुमेभिश्चन्दनतांबूलकुण्डलांगुलीयककमण्डलुवासोभिराचार्यत्वेन अनुकगोत्रममुकशर्माणममुकवेदाध्यायिनं त्वामहं वृणे इति वृणुयात् ॥ आचार्यो वृतोऽस्मि इति प्रतिवचन दद्यात् । ॐ यजमान उपस्थित गंधादि सामग्री लेकर ब्राह्मणोंका वरण करे उनमें प्रथम आचार्यका फिर और सबका

व्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम्॥
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥ इत्यनेन मंत्रेण कुशस्थैर्जलबिंदुभिर्यजमानमभिषिचेत् । अथ यजमानेनाचार्यप्रार्थना -आचार्यस्तु यथास्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ १ ॥ अथ ब्रह्मवरणम् । ब्रह्माणंप्रतियजमानो ब्रूयात-अस्मिन्नासने आस्यताम् । ( ब्राह्मणः ) आस्ये । ततो यजमानः नमोऽस्त्वनंतायेति मंत्रेण पादप्रक्षालनं कुर्यात् । गंधपुष्पमाल्यादिभिरभ्यर्च्यअद्येत्यादिनवग्रहमखहोमकर्मणिन्यूनाधिक्यपरिहारार्थमेभिश्चंदनतांबूलकुण्डलांगुलीयककमंडलुवासोभिर्ब्रह्मत्वेनामुकगोत्रममुकशर्म्माणममुकवेदाध्यायिनं त्वामहं वृणे। ( ब्राह्मणः ) वृतोऽस्मि इति प्रतिवचनम् । ( यजमानः ) यथा चतुर्मुखो ब्रह्मा सर्ववेदधरःप्रभुः तथा त्वं मम यज्ञेऽस्मिन्ब्रह्माभव यथाविधान वरण करे । साथही कथित मंत्रोंसे उनकी यथायोग्य प्रार्थना करे और ब्राह्मणलोग 'वृतोऽस्मि'

द्विजोत्तम ॥१ ( ब्रह्मा ) ओंव्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम्॥दक्षिणाश्रद्धामाप्नोति श्रद्धया सत्यमाप्यतेइत्यनेन मंत्रेण कुशस्थैर्जलबिन्दुभिर्यजमानमभिषिंचेत् ॥ अथ ऋत्विग्वरणम्--ऋत्विजंप्रति यजमानो ब्रूयात्-इदमासनमास्यताम् । (ऋत्विक्) आस्ये । ततो यजमानः नमोऽस्त्वनंतायेति मन्त्रेण पादप्रक्षालनं कुर्यात् गंधपुष्पमाल्यादिभिरभ्यर्च्य ओं अद्येत्यादिनवग्रहमखहोमकर्मणि हवनं कर्तुमेभिश्चंदनतांबूलकुंडलांगुलीयककमंडलुवासोभिः ऋत्विक्त्वेनअमुकगोत्रममुकशर्माणममुकवेध्यायिनं त्वामहं वृणे । (ऋत्विक्) वृतोऽस्मि इति प्रतिवचनम् । (यज०) ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः॥ अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विकत्वं मे मखेभव ॥१॥ ऋत्विक् ॐव्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् आदिसे स्वीकृति करें । इसका क्रम यह है—पहिले ब्राह्मणोंके चरण धोवे फिर उनके तिलक कर अक्षत पुष्प चढ़ावे और पीछे जनेऊ जोड़ा सुपारी दक्षिणा

दक्षिणाश्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥
इत्यनेन मन्त्रेण कुशस्थैर्जलबिंदुभिर्यजमानम-
भिषिञ्चेत् ॥ एवमध्वर्युं होतारं सदस्यमुपद्रष्टारं च
वृणुयात् ॥ अथ यजमानेन सर्वेषां प्रार्थना-त्वंगु-
रुश्च पिता माता त्वं प्रभुस्त्वंपरायणम् ॥ त्वत्प्रसा
दाच्च विप्रर्षे सर्वंमेस्यान्मनोगतम् ॥१॥ आपद्विमो
क्षणार्थाय कुर्युर्यज्ञमतन्द्रिताः ॥ ऋत्विजः सहि
ताः शुक्लाः संयुताः सुसमाहिताः ॥२॥ आचार्येण
च संयुक्ताः कुर्युः कर्म यथोदितम् ॥ भगवन्सर्व-
धर्मज्ञ सर्वधर्मभृतांवर ॥३॥ वितते ममयज्ञेऽस्मि-
न्नुपद्रष्टा भव द्विज ॥ ४ ॥ अथ रक्षाविधानं वा
रक्षाबन्धनम् । तत्रादौ श्वेतसर्षपतंडुलपूर्णपुटक-
मादाय रक्षासूत्रं सफलदक्षिणाकं गृहीत्वा मंत्रान्
पठित्वा सर्षपाक्षतैर्दिग्रक्षां कुर्यात् ॥ ओं पूर्वे रक्षतु
वाराह आग्नेय्यां गरुडध्वजः । दक्षिणे पद्मना-
तथा और कुछ धोती डुपट्टा, आसन, लोटा आदि हों
तो वे देकर उनप्रत्येकका वरण करे । फिर एक दोनेमें
सफेद सरसों और अक्षत तथा रक्षासूत्र और दक्षिणा

भस्तु नैऋंत्यां मधुसूदनः ॥ पश्चिमे चैव गोविंदो वायव्यां तु जनार्दनः ॥ उत्तरे श्रीपती रक्षेदीशान्यां हिमहेश्वरः ॥ ऊर्ध्वं रक्षतु धाता वो ह्यधोऽनन्तश्च रक्षतु ॥ अनुक्तमपि यत्स्थानं रक्षत्वीशो ममाद्रिधृक् ॥ इति । ततो रक्षासूत्रम् । ओं येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेनत्वामनुबध्नामि रक्षे माचल माचल । [ आचार्यस्य यजमानगात्रप्रमाणम् । अन्येषां प्रमाणं न ] इति आचार्यादिवरणम् । ॥ ९ ॥ अथ कलशस्थापनम्—ओं भूरसि भूमिरस्यदितिरसिविश्वधाया-विश्वस्य भुवनस्य धर्त्रीं पृथिवींयच्छपृथिवीं दृँह पृथिवीं माहिँसीः ॥ इतिमंत्रेण गंधादिभिः पृथ्वीमभिपूज्य हस्तेन स्पर्शं कुर्यात् ॥ ओंमानस्तो-सुपारी आदि लेकर रक्षाविधान करे कुछ सरसों और अक्षतोंसे सब दिशाओंकी रक्षा कर 'येन बद्धो० 'से यजमानके रक्षा बांधे॥९॥अब कलशस्थापन कहतेहैं—'भूरसिभूमिरस्य०' इस मन्त्रसे पृथ्वीका पूजन करके उसको स्पर्श करे । 'मानस्तोके तनये० 'इस मंत्रसे कल-

केतनये मानऽआयुषि मानो गोषु मानोऽअश्वेषु रीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मंतः सदमित्त्वाहवामहे॥इति मंत्रेण कलशेगोमयस्पर्शं कुर्यात् । ओंधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्रसितिमायुषेधांदेवोवः सविताहिरण्यपाणिःप्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वामहीनाम्पयोऽसि ॥ इतिमंत्रेण धान्यराशिं कृत्वा ॥ ओं आजिघ्रकलशंमह्यात्वाविशन्त्विदवः । पुनरूर्ज्जानिवर्तस्व सानः सहस्रं धुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ इति मंत्रेण कलशस्पर्शं कुर्यात् । ओं वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्जनीस्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद । इति मंत्रेण कलशे जलं दद्यात् ओं पवित्रेस्थोव्वैष्णव्यौ सवितुर्वः प्रसवऽउत्पु-

शको गोमयसे मांजे अथवा स्पर्श करे । 'धान्यमसि' से यव गोधूमादिकी ढेरी करे । 'आजिघ्रकलसम् ०'से कलशको धान्यराशिपर स्थापित करे। 'वरुणस्योत्त०'

नाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ इति मंत्रेण कलशे पवित्रं दद्यात् ॥ ओं अम्बेऽअम्बिकेऽम्बालिके नमानयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ इति मंत्रेण कलशे पंच पल्लवान् दद्यात् ॥ ओं प्राणाय स्वाहा अपानाय स्वाहा व्यानाय स्वाहा इति मंत्रेण कलशे ताबूलंदद्यात ॥ ओं याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पति प्रसूतास्ता नो मुञ्चन्त्व ँ हसः ॥ इति मंत्रेण कलशे पूगीफलं नारिकेलंवा दद्यात् । ओं हिरण्य गर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत्॥ सदाधारपृथिवीं द्यामुते मां कस्मै देवाय आविषा ष्विधेम ॥ इति मंत्रेण कलशे हिरण्यमन्यद्द्रव्यं वा दद्यात् । ओंअग्निर्ज्योतिर्ज्योतिरग्नि से कलशमें जल डाले । 'पवित्रेस्थो०' से उसपर पवित्र धरे । 'अम्बे' से कलशमें पंच पल्लव धरे । 'प्राणाय स्वहा०'से तांबूल दे 'याःफलिनी०' से पानसुपारी रखे 'हिरण्यगर्भः०' से दक्षिणा चढावे और'अग्निर्ज्योतिः०'

स्वाहा सूर्योज्योतिर्ज्योतिःइतिसूर्य्यं स्वाहा॥ अग्नि र्वर्च्चोज्योतिर्वर्चः स्वाहा सूर्योवर्च्चोज्योतिर्वर्च्चः स्वाहा ॥ ज्योतिः सूर्य्यः सूर्योज्योतिःस्वाहा॥इति मन्त्रेण कलशसमीपे पूर्वदिशि एकस्मिन्पात्रे दीपं निदध्यात् । इति कलशस्वरूपम् ॥ १० ॥ अथ कलशाधिष्ठातृदेवतानामावाहनम्--ओं सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः॥इति मंत्रेण कलशे गंधाक्षतपातः ॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः॥ मूले तस्य स्थितो ब्रह्मा मध्ये मातृ-गणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपावसुं-धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अंगैश्च सहिताःसर्वे कलशं तु समाश्रिताः इत्या-वाह्य पूजनं कुर्यात् ॥ तत्रादौ संकल्पः ॥महामां-गल्यप्रदे मासोत्तमेऽमुकमासेऽमुकपक्षेऽमुकतिथौ

से कलशके पास पूर्वमें दीपक रखदे ॥ १० ॥ इसके पीछे 'सरितः सागराः०' से कलशाधिष्ठातृदेवताओंका आवाहन पूजन करके 'देवदानवसंवादे०' से प्रार्थना

अमुकगोत्रस्याऽमुकशर्मणः सपरिवारस्य निखिल कामनावाप्त्यर्थं कर्तव्यममुककर्म कर्तुं कलशाधिष्ठातृदेवतानां पूजनमहं करिष्ये॥ इति संकल्प्य ॐकलशाधिष्ठातृदेवताभ्यो नमः।इति मंत्रेणगंधादिभिः संपूज्य पुष्पांजलिं निवेद्य नतिं कुर्यात् ॥ अथ कलशप्रार्थना--देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुंभ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥ शिवः स्वयं त्वामेवासि विष्णुस्त्वंच प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाःस पैतृकाः ॥ त्वयि तिष्ठंति सर्वेऽपि ये च कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा॥ इति कलशस्थापनम् ॥ ११ ॥ अथ कलशाग्रे पश्चिमदिशि गणेशाम्बिकयोः पूजनम्--तत्रादौ हस्ते गंधाक्षतपुष्पाणि गृहीत्वा गणेशावाहनं करे ॥११॥ इस कलशके आगे पश्चिम दिशामें गणेश

कुर्यात् । ओंएह्येहि हेरम्ब महेशपुत्र समस्तविघ्नौघविनाशदक्ष ॥ मांगल्यपूजाप्रथमप्रधानं गृहाण पूजां भगवन्ननमस्ते ॥ ओं गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे व्वसोमम।आहमजानि गर्भधमात्वमजासि गर्भधम् ॥ आगच्छभगवन्देव स्वस्थानात्परमेश्वर ॥ अहं पूजां करिष्यामि सदा त्वं संमुखो भव॥१॥इत्यावाह्य पूजयेत्।एतत्पाद्यं गणपतये नमः।एषोऽर्घोगणपतये नमः । एतत्स्नानीयजलंगणपतये नमः इमेवस्त्रयज्ञोपवीतेगणपतयेनमः।अयं गंधो गणपतये नमः।इमे अक्षताः गण पतये नमः।इदंपुष्पं गणपतये नमः।ओंधूरसि धूर्व धूर्वन्तंधूर्वतं योऽस्मान्धूर्वतितंधूर्वयंवयंधूर्वामः।।देवानामसि वह्नितमꣳसस्नितमम्पप्रितमंजुष्टतमं देवहूतमम्।।इतिमंत्रेण दीपं गणपतये नमः।।नैवेद्यंगणतये

और अम्बिकाका इस भांति पूजन करे-हाथमें गन्धाक्षत पुष्प लेकर एह्येहि हेरम्ब०, से आवहन करके फिरउक्त

नमः ॥ आचमनीयं गणपतये नमः ॥ तांबूलं गणपतयेनमः।फलं दक्षिणां च गणपतयेनमः॥अथ विशेषार्घः । रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक भक्तानामभयं कर्त्ता त्राता भव भवार्णवात् ॥१॥ द्वैमातुर कृपासिंधो प्रभो षाण्मातुराग्रज ॥ वरदस्त्वं वरं देहि वांछितं वांछितार्थद ॥२॥ गृहाणार्घमिमं देव सर्वदेवनमस्कृत ॥ अनेन फलदानेन फलदः स्याः सदा मम ॥३॥ इति विशेषार्घः ॥ अथ पुष्पांजलिः । मालतीमल्लिकाजातीशतपत्रादिसंयुतम्।पुष्पांजलिं गृहाणेश तव पादयुगार्पितम् ॥ इति पुष्पांजलिं दत्त्वा ओं एतान्यर्चनानि पाद्यार्घस्नानवस्त्रयज्ञोपवीतगंधाक्षतपुष्पधूपदीपनैवेद्याचमनीयताम्बूलफलदक्षिणापुष्पांजलयंतानि परिपूर्णानि भवंतु । अनेन पूजनेनगणपतिःप्रीयताम् ॥ अथ प्रार्थना--विघ्नेश्वराय वरदाय सुरप्रि-

मन्त्रोंसे, पाद्य, अर्घआचमनीयादि उपचारोंसे पूजनकरके एक पात्रमें जलाक्षतपुष्प रखकर 'रक्षरक्ष०' से विशेषार्घ्य दे और पुष्पांजलि देकर 'विघ्नेश्वराय०' से प्रार्थना

याय लम्बोदराय सकलाय जगद्धिताय । नागाननाय सुरयज्ञविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते । इति प्रार्थना ॥१२॥ अथ गौरीपूजनम् । ओंश्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषणामुम्मऽइषाण सर्वलोकम्मऽइषाण॥ सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके॥ शरण्ये त्र्यंबके गौरि नारायणि नमोस्तुते ॥ ओंगौर्यै नमः॥इत्यनेन पाद्यादिभिः संपूज्य। कुंकुमं कामदं दिव्यं कामनाकामसंभवम्॥कुंकुमेनार्चिते देवि गृहाण परमेश्वरि॥१॥ हरिद्रानिर्मितं देवि सौभाग्यं सुखसंपदा । अतस्त्वां पूजयिष्यामि गृहाण रमेश्वरि ॥२॥ अबीरं च गुलालं च चोवा चंदनमेव च। अबीरेणार्चिता देवि ततः शांतिं प्रयच्छ मे॥३॥ सिंदूरं शोभनं रक्तं सौभाग्यं प्रियवर्धनम् ॥ सुखदं मोक्षदं चैव सिंदूरं प्रतिगृह्यताम् ॥४॥ अक्षताश्च सुरश्रेष्ठ कुंकु-

करे ॥ १२ ॥ इसी प्रकार 'श्रीश्चतेलक्ष्मीश्चपत्न्या॰' इत्यादि मंत्रोंसे गौरी (अम्बिका) का पूजन करे अर्थात्

माक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वरि ॥ ५ ॥ माल्यादीनि सुगंधीनि मलत्यादीनि वै प्रभो । मयाहृतानि पूजार्थपुष्पाणि प्रतिगृह्यताम् ॥ ६ ॥ वनस्पतिरसोत्पन्नः सुगंधाढ्यो मनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥७॥साज्यं च वर्त्तिसंयुक्तं वह्निना योजितं मया ॥ दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहम् ॥८॥ शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ॥ आहारं भक्ष्यभोज्यं च नैवेद्य प्रतिगृह्यताम् ॥९॥ गंगाजलं समानीतं सुवर्णकलशोद्धृतम् ॥ देवेशाचमनीयं ते प्रीत्यर्थं प्रतिगृह्यताम्॥१०॥इदं फलं मया देवि स्थापितं पुरतस्तव ॥ तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥११॥ हिरण्यगर्भगर्भस्थं हेगबीजं विभावसोः । अनंतपुण्यफलदमतः शांतिं प्रयच्छमे ॥१२॥ यानि कानि च पापानि जन्मान्तरकृतानि च ॥ तानि तानि विनश्यंति प्रदक्षिणपदेपदे ॥ १३ ॥ इति पुष्पांजलिं निवेद्य प्रत्येक मंत्रके उच्चारणसे प्रत्येक गन्ध पुष्पादि अर्पण करके

नतिं कुर्यात् । इतिसंक्षेपतो गौरीपूजनम् ॥१३॥

अथ ग्रहाणां स्थापन-पूजन-प्रकारमाह-

रक्तपुष्पाक्षतान् गृहीत्वा आवाहयेत् । सप्तम्यां विशाखान्वितायां कलिंगे जातं काश्यपगोत्रं लोहितवर्णं वर्तुलाकृतमंडलमध्यस्थं प्राङ्मुखं द्विभुजं पद्महस्तं सप्ताश्वरथवाहनं क्षत्रियाधिपतिमीश्वराधिदैवत्यमग्निप्रत्यधिदैवतसहितं सूर्य्यमावाहयामि।ओंभूर्भुवः स्वः भगवन् सूर्य इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य।ओं आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यंच।हिरण्ययेन सविता रथेना।देवो याति भुवनानि पश्यन्॥

अन्तमें अक्षत पुष्प लेकर पुष्पांजलि अर्पण करे॥१३॥

अब ग्रहपूजन कहतेहैं-लाल अक्षत पुष्प लेकर विशाखायुक्त सप्तमीमें कलिंग देशमें जन्मे हुए काश्यपगोत्र, लोहितवर्ण, गोलमंडलके बीचमें बिराजमान, पूर्वमुख, द्विभुज, पद्महस्त, सात घोड़ोंकेरथकी सवारीवाले और क्षत्रियोंके अधिपति ऐसे

पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ॥ सप्ताश्वः सप्तरज्जुश्च द्विभुजः स्यात्सदा रविः ॥ १ ॥ इति मंत्रेण पाद्यादिभिः सूर्य्यं संपूज्यानेनैव मंत्रेण रक्त-पताकादानम् । इति सूर्यपूजनम् ॥ १९ ॥ अथ चन्द्रावाहनम् । श्वेतपुष्पाक्षतान्गृहीत्वा आवाह-येत् । ओं चतुर्दश्यां कृत्तिकान्वितायां समुद्रे जातमत्रिगोत्रं श्वेतवर्णं चतुरस्राकृतिमण्डलात्पूर्व-दक्षिणदिक्स्थं पश्चिमाभिमुखं दशाश्वरथवाहनं विशां पतिमुमाधिदैवतं जलप्रत्यधिदैवतसहितं चन्द्रमावाहयामि।ओं भूर्भुवः स्वः चन्द्र इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इ० ॥ ओं इमं देवेति

ईश्वर अधिदेव और अग्नि प्रत्यधिदेवता सहित सूर्यका आवाहन करके 'ॐ आकृष्णेन०' इस मन्त्रसे पाद्य आचमनादिसे पूजन करे ॥ १४ ॥ सफेद पुष्पाक्षत लेकर कृत्तिकायुक्त चतुर्दशीमें समुद्रमें जन्मेहुए, अत्रिगोत्र श्वेत वर्ण, चौकोठा आकृतिके मण्डलसे पूर्वदक्षिण दिशामें विराजमान;पश्चिमाभिमुख, दश घोडोंकी सवारीवाले और वैश्योंके पति उमाधिदेव

मंत्रेण पाद्यादिभिश्चन्द्रं संपूज्यानेनैव मंत्रेण श्वेतपताकादानम् । इति चंद्रपूजनम् ॥२॥१५॥ अथ भौमावाहनम्–रक्तपुष्पाक्षतान् गृहीत्वा आवाहयेत् । दशम्यां पूर्वाषाढान्वितायामवंत्यां जातं भारद्वाजगोत्रं रक्तवर्णं त्रिकोणमण्डलाद्दक्षिणदिग्विभागस्थं दक्षिणाभिमुखं मेषवाहनं क्षत्रियाधिपतिं स्कंदाधिदैवतं क्षितिप्रत्यधिदैवतसहितं भौममाह्वयामि । ओं भूर्भुवः स्वः भौम इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ओं अग्निर्मूर्द्धेति मंत्रेण पाद्यादिभिः भौमं संपूज्य अनेनैव

तथा जल प्रत्यधिदेवसहित चन्द्रका आवाहन करकेॐ 'इमंदेवा०, इस मंत्रसे पाद्यादि पूजन करे॥१५॥लाल पुष्प और लाल अक्षत लेकर पूर्वाषाढायुक्त दशमीमेंउज्जैनमें जन्मे हुए भारद्वाजगोत्र, लालवर्ण, त्रिकोणमण्डलके दक्षिणभागमें बैठेहुए दक्षिणाभिमुख मेंढोंकी सवारीवाले और क्षत्रियोंके स्वामी स्कंदाधिदेव और पृथ्वी प्रत्यधिदेव सहित भौमका आवाहन करके अग्निर्मूर्द्धा०

मंत्रेण रक्तपताकादानम् । इति भौमपूजनम्॥३॥
॥ १६ ॥ अथ बुधावाहनम् । हरित्पुष्पाक्षतान्गृहीत्वा आवाहयेत् । द्वादश्यां धनिष्ठान्वितायां मगधदेशेजातमत्रिगोत्रं हरिद्वर्णबाणाकृतिमंडलापूर्वोत्तरस्थमुत्तराभिमुखं शूद्राधिपतिं सिंहवाहनं नारायणाधिदैवतं विष्णुप्रत्यधिदैवतसहितं बुधमावाहयामि । ओं भूर्भुवः स्वर्बुध इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ओं उद्बुध्यस्वाग्न इति मंत्रेण पाद्यादिभिर्बुधं संपूज्य अनेनैव मंत्रेण हरितपताकादानम् । इति बुधपूजनम् ॥४॥१७॥
अथ गुर्वावाहनम्-पीतपुष्पाक्षतान्गृहीत्वा आवाह-

से पाद्यादि पूजन करे और इसीसे लाल रंगकी पताका भी धारण करावे॥ १६ ॥ हरे पुष्पाक्षत लेकर धनिष्ठायुक्त बारसमें मगधदेशमें जन्मेहुए, अत्रिगोत्र, हरिद्वर्ण बाणाकृतिमंडलसे पूर्वोत्तर उत्तराभिमुख बैठेहुए शूद्रोंके स्वामी सिंहवाहन ऐसे नारायणाधिदैवत और विष्णु प्रत्यधिदैवतसहित बुधका आवाहन करके 'उद्बुध्य०' इससे पूजन ॥१०॥ पीले पुष्पाक्षत लेकर उत्तराफाल्गु-

येत् । एकादश्यामुत्तराफाल्गुनीयुतायां सिंधुदेशे जातमांगिरसगोत्रंगोरोचनाभंदीर्घचतुष्कोणाकृति मंडलादुत्तरस्थितमुत्तराभिमुखं सिंहवाहनं ब्रह्माधिदैवतमिन्द्रप्रत्यधिदैवतसहितं गुरुमावाहयामि ओं भूर्भुवः स्वः गुरो इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ओं बृहस्पतेइति मंत्रेण पाद्यादिभिर्गुरुं संपूज्य अनेनैव मंत्रेण पीतपताकादानम् । इति गुरुपूजनम् ॥५॥१८॥ अथ शुक्रावाहनम् । श्वेतपुष्पाक्षतान् गृहीत्वाऽऽवाहयेत् नवम्यां पुष्ययुतायां भोजकटे जातं भार्गवगोत्रं शुक्लवर्णं पंचकोणमंडलात्पूर्वदिक्स्थं पूर्वाभिमुखं

नीयुक्त एकादशीमें सिंधुदेशमें जन्मे हुए आंगिरस गोत्रवाले गोरोचन जैसे वर्णके दीर्घ ( लंबे ) चौकोर आकृतिके मण्डलसे उत्तरमें उत्तराभिमुख बैठेहुए सिंह वाहनवाले ब्रह्मादिदेव और इन्द्र प्रत्यधिदेव सहित बृहस्पतिका आवाहन करके ‘ बृहस्पते० ’ इस मंत्रसे पाद्यादिसे पूजन करे ॥ १८ ॥ सफेद पुष्पाक्षत लेकर पुष्पयुक्त नौमीमें भोजकटमें जन्मे हुए भृगुगोत्रके सफेद

श्वेताश्ववाहनमिंद्राधिदैवतमिंद्राणीप्रत्यधिदैवतस हितं शुक्रमावाहयामि ओं भूर्भुवःस्वःशुक्रइहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इ० । ओं अन्नात्परीति मंत्रेण पाद्यादिभिः शुक्रं संपूज्य अनेनैव मंत्रेण श्वेतपताकादानमिति शुक्रपूजनम् ॥६॥१९॥अथ शन्यावाहनम् । बिल्वपत्राक्षतान्गृहीत्वावाहयेत् । अष्टम्यां रेवतीयुतायां सौराष्ट्रे जातं काश्यपगोत्रं लोहवर्णं धनुराकृतिमण्डलात्पश्चिमस्थं पश्चिमाभिमुखं गृध्रवाहनं संकरजातिं यमाधिदैवतं प्रजापतिप्रत्यधिदैवतसहितं शनिमावाहयामि ॐभूर्भुवः स्वःशने इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इ०।

वर्णवाले, पंचकोण मंडलमें पूर्वदिशामें बैठे हुए पूर्वाभिमुख, सफेद घोडावाले इन्द्राधिदेव और इन्द्राणी प्रत्यधिदेव सहित शुक्रका आवाहन करके 'अन्नात्परिस्रुतो०' से पूजन करे ॥१९॥ बेलपत्र और अक्षत लेकर रेवतीयुक्त अष्टमीमें सौराष्ट्रमें जन्मेहुए काश्यपगोत्रवाले लोहवर्णवाले धनुष्याकृतिमंडलसे पश्चिममें पश्चिमाभिमुख बैठेहुए और गृध्र वाहनवाले तथा संकर

ओंशंनोदेवीरितिमंत्रेण पाद्यादिभिः शनिंसंपूज्या-
नेनैव मंत्रेण कृष्णपताकादानम् । इति शनि-
पूजनम् ॥७॥२०॥ अथ राहोरावाहनम्--कृष्ण-
पुष्पाक्षतान्गृहीत्वाऽऽवाहयेत्।पौर्णमास्यां भरणी-
युतायां बर्बरे जातं पैठीनसिगोत्रं कृष्णवर्णं ध्वजा-
कृति मंडलात्पश्चिमदक्षिणदिक्स्थंदक्षिणाभिमुखं
शूद्राधिपतिंसिंहवाहनं कालाधिदैवतं सर्पप्रत्यधिदै
वतसहितं राहुमावाहयामि ओं भूर्भुवः स्वः राहो
इहागच्छइहतिष्ठइमंयज्ञमभिरक्षइत्या०। ओंकयान
श्चित्रेतिमंत्रेण पाद्यादिभिः राहुं संपूज्यानेनैवमंत्रेण
कृष्णपताकादानम् । इति राहुपूजनम् ॥८॥२१॥
अथ केत्वावाहनम्--कृष्णपुष्पाक्षतान् गृहीत्वा
जातिके स्वामी यमाधिदेव और प्रजापति प्रत्यधिदेव
सहित शनिका आवाहन करके 'शन्नोदेवी०' से पूजन
करे ॥ २० ॥ काले पुष्पाक्षत लेकर भरणीयुक्त पूर्णि-
मामें बर्बरदेशमें जन्मेहुए पैठीनसगोत्री कृष्णवर्णवाले
ध्वजाके आकारके मंडलसे पूर्व दाक्षिणस्थ दक्षिणाभिमुख
शूद्रोंके स्वामी और सिंहकी सवारीवाले कालाधिदैव

आवाहयेत्।अमावास्यायामाश्लेषान्वितायां जातं जैमिनिगोत्रं धूम्रवर्णं कपोतवाहनमंत्यजाधिपतिं शूर्पाकृतिमंडलात्पश्चिमोत्तरस्थं दक्षिणाभिमुखं चित्रगुप्ताधिदैवतं ब्रह्मप्रत्यधिदैवतसहितं केतुमावाहयामि।ओं भूर्भुवः स्वः केतो इहागच्छ इहतिष्ठ इमं यज्ञमभिरक्ष इ० । ओं केतुंकृण्वन्निितिमंत्रेण पाद्यादिभिःकेतुसंपूज्य अनेनैव मंत्रेण धूम्रपताकादानम् ॥ इति केतुपूजनम् ॥९॥१२॥ अथ गणेश कलशगौरीशानभागे यज्ञेश्वरकलशस्थापनम् ।

और सर्पप्रत्यधिदेवसहित राहुका आवाहन करके कयानश्चित्र०, से पूजन करे ॥ २१ ॥ और काले पुष्पाक्षत लेकर, आश्लेषायुक्त अमावस्यामें जन्मे हुए जैमिनिगोत्री, धूम्र वर्णवाले, कपोत ( कबूतर ) के वाहनवाले, अन्त्यजोंके मालिक और शूर्पाकार मंडलसे पश्चिमोत्तरस्थ दक्षिणाभिमुख चित्रगुप्ताधिदैव और ब्रह्मप्रत्यधिदैव सहित केतुका आवाहन करके 'केतुं कृण्वन्० ' पूजन करे ॥ २२ ॥ इसके पीछे गणेश गौरीसे ईशानमें यज्ञेश्वर कलशका स्थापन

तद्यथा--अश्वत्थगौरमृत्तिकापंचरत्नसर्वौषधिफल द्रव्यवस्त्राम्रपल्लवसंयुतं कलशमैशान्यां स्थापयेत् तत्रपठनीयो मंत्रः ओं सूर्यायत्वाजुष्टंनिर्वापयामि। ॐ चन्द्रायत्वाजुष्टं निर्वापयामि इति। अनेनैव मंत्रेण कलशमध्ये अक्षतगंधपुष्पाणांप्रक्षेपः।अनेनैव कलशजलेन यज्ञान्ते यजमानमभिषिंचेत् ॥ इति नवग्रहपूजनविधिः ॥२३॥ अथ सर्वतोभद्रमंडलदेवताः पुराणोक्तरीत्या लिख्यन्ते--त्वं वै चतुर्मुखो ब्रह्मा सत्यलोके पितामहः। आगच्छ मंडलेचास्मिन्ममसर्वार्थसिद्धये॥ इति मध्ये ब्रह्माणम् ॥१॥ क्षीरोदार्णवसंभूत लक्ष्मीबंधो निशाकरे। पीपलकी सफेद वालू पंचरत्न सर्वौषधि आदि संयुक्त कलश स्थापन करके'सूर्याय त्वा०' से गंध पुष्पाक्षत छोड़कर पूजन करे और यज्ञसमाप्तिमें इसी कलशके जलसे यजमानका अभिषेक करे। इसे रुद्रकलशभी कहते हैं ॥२३॥ अब सर्वतोभद्र मण्डलकी पुराणोक्त रीतिसे देवपूजा कहते हैं -गन्धपुष्पाक्षत लेकर 'त्वं वै चतुर्मुखो ब्रह्मा० ' इस

कर। मंडले स्थापयाम्यत्र सोमं कार्यार्थसिद्धये॥ इति उत्तरे सोमम् ॥ २ ॥ ईशानीपालकं श्रेष्ठं सर्वलोकभयंकरम् । मंडले स्थापयामीह ईशानं सर्वसिद्धये ॥ इति ऐशान्यामीशानम् ॥३॥ सर्व-लोकाधिकंश्रेष्ठं देवर्षीणां च पालकम् । पूर्वदिक्पालकं देवराजानं स्थापयाम्यहम् ॥ इति पूर्वे इन्द्रम्॥४॥ त्रिपादं मेषवाहं च त्रिशिखं च त्रिलोचनम् । आग्नेय्यां स्थापयाम्यत्र ह्यग्निपुरुषमुत्तमम्॥ इत्याग्नेय्यामग्निम् ॥ ५ ॥ अंतकः सर्वलोकानां धर्मराज इति श्रुतः । अतस्त्वां स्थापयाम्यत्र दक्षिणस्यां स्थिरो भव ॥ इति द० यमम् ॥६॥ नैर्ऋत्यांवसतिर्यस्य घोररूपी सदा हि यः। निर्ऋतिं स्थापयाम्यत्र नैर्ऋत्यां मंडले शुभे॥ इतिनैर्ऋत्यां

मन्त्रसे मण्डलके मध्यमें ब्रह्माका स्थापन करे ॥१॥ 'क्षीरोदार्णव०' से सोमका स्थापन करे ॥ २ ॥ 'ईशानीपालकं० से ईशानका स्थापन करे॥ ३ ॥ 'सर्वलोकाधिकं से इन्द्रका० ४ ' त्रिपादं० ' से अग्निका ५ ' अन्तकः सर्व ' से यमका ६

निर्ऋतिम् ॥ ७ ॥ अपांपतिं पाशधरं यादसां पतिमुत्तमम् । वरुणं स्थापयाम्यत्र वारुण्यां मंडले शुभे॥ इतिपश्चिमे वरुणम् ॥ ८॥ आशुगं स्पर्शबोधं च गंधवाहं सुशीतलम् । मंडले स्थापयामीह वायव्यां वायुमुत्तमम्॥इति वायव्यां वायुम् ॥९॥ धरोध्रुवश्चसोमश्चाप्याशुगश्चनलोऽनलः । प्रत्यूषश्च प्रभासश्च वस्वष्टकमिहस्थिरम् वायुसोमयोर्मध्ये वसून् ॥१०॥ त्रिनेत्राय त्रिरूपाय त्रिजटायमहात्मने। नमस्कृत्य स्थापयामि मंडलोपरिमध्यतः॥ सोमेशानयोर्मध्ये रुद्रम् ॥११॥ आदित्यं भास्करं चैव प्रभाकरदिवाकरौ । सूर्यग्रहपतिं चैवब्रध्नंतेजो हरिद्धरिम् । सप्ताश्ववेद मूर्तिंचत्रिदैवत्यंक्रमेण च। इत्यादिद्वादशादित्यान्मंडले स्थापयाम्यहम् ॥ इन्द्रेशानयोर्मध्येद्वादशादित्यान् ॥१२॥ अश्विनौ

'नैऋत्यां वसतिः०' से निर्ऋतिका७'अपांपतिं०' से वरुणाका ८ 'आशुगं०' से वायुका ९ 'धरो ध्रुवश्च०' से वसुओंका १० 'त्रिनेत्राय०' से रुद्रका ११ 'आदित्यं०' से द्वादशादित्योंका १२'अश्विनौ०' से

देववैद्योचसर्गस्थित्यंतकारकौ।मंडले स्थापयित्वा तु पूजयामीष्टसिद्धये ॥ इंद्राग्न्योर्मध्ये अश्विनौ ॥१३॥ दैवेकर्मणिपित्र्येचयेमुख्याः सर्वदा शुभाः । मंडलेस्थापयामीहसुखानुष्ठानसिद्धये ॥ अग्नि-यमयोर्मध्ये विश्वान्देवान् ॥१४॥ यदृच्छयापर्यट-न्तियक्षराजामहीतले।कौतुकंप्रेक्षितुंचास्मिन्मंडले संतुसुस्थिराः ॥ यमनिर्ऋत्योर्मध्ये यक्षान् ॥१५॥ अनंतोवासुकिश्चैव कालीयोमणिभद्रकः । शंखश्च शंखपालश्चकर्कोटकधनंजयौ ॥ धृतराष्ट्रश्चनागे-शाः प्रगृह्णन्तुममार्चनम् ॥ निर्ऋतिवरुणयोर्मध्ये नागान् ॥१६॥ उर्वशीप्रमुखाः सर्वाः स्ववेश्याः शक्रपूजिताः गंधर्वैश्च सहायांतु मंडलेऽस्मन्सु-शोभनाः ॥ वरुणवाय्योर्मध्येगंधर्वाप्सरसः ॥१७॥ त्रियम्बकंत्रिपुरुषंनीलकंठंसदाशिवम् । मंडलेस्था पयामीह सुखानुष्ठानसिद्धये । ब्रह्मसोमयोर्मध्ये

अश्विनीकुमारोंका १३ 'दैवेकर्मणि०' से विश्वे देवोंका १४ 'यदृच्छया०' से यक्षोंका १५ 'अनंतो०' से सर्पोंका १६ उर्वशी०' से गंधर्वोंका १७ 'त्रियंबकं सेरुद्रका १८'

रुद्रम् ॥ १८ ॥ षडाननंचतुर्हस्तंस्कंदंगौरीसुतं शुभम् । इहैवपूजयिष्यामि सर्वकामार्थसिद्धये ॥ रुद्रसोमयोर्मध्ये स्कंदम् १९॥ शिवद्वारगतस्त्वं चशिववाहनमुत्तमम् । पार्वत्यां प्रीतिकृन्नित्यमिहागच्छस्थिरोभव। तत्रैव नंदिनंशूलमहाकालौ च ॥ २० ॥ अदितिर्देवमातात्वंदक्षपुत्रीसुशोभना । मंडलेऽस्मिन्समागच्छयावत्पूजास्थिराभव ॥ तत्रैवादितिम् ॥२१॥ दक्षोऽसि सर्वकार्येषु महायज्ञकरप्रियः। ऋषिश्च सर्वदा दक्ष मंडलेऽस्मिन्स्थिरो भव ॥ तत्रैव दक्षम् ॥२२॥ तामग्निवर्णां तपसा ज्वलंतीं सर्वदा शुभाम् ॥ भक्तानां वरदा नित्यां दुर्गामावाहयाम्यहम् ॥ ब्रह्मेंद्रयोर्मध्ये दुर्गाम् ॥२३॥ कृष्णाय गोपीनाथाय चक्रिणे मुरवैरिणे॥ नमस्तुभ्यं जगद्धातर्मंडलेऽस्मिन् स्थिरोभव ॥ तत्र कृष्णम् ॥ २४ ॥ ब्रह्माग्न्योर्मध्ये स्वधाम

'षडाननं' से स्कंदका १९ 'शिवद्वार०' से नन्दी शूल महाकालका २० 'अदिति०' से आदितिका २१ 'दक्षोसि०, दक्षका २२ 'तामग्नि०' से दुर्गाका २३

॥२५॥मृत्युरोगानंतकस्यप्रेष्यान्प्राणहरान्गणान्। मंडलेस्थापयामीह पूजार्थंलोकनाशकान् ॥ ब्रह्मयमयोर्मध्येमृत्युरोगान् ॥ २६ ॥ कुंकुमाभं सदानन्दंभक्तसंकटनाशनम् । चतुर्बाहुं त्रिनेत्रं च मण्डले स्थापयाम्यहम् ॥ ब्रह्मनिर्ऋतिमध्ये गणेशम् ॥ २७ ॥ पावनाः सर्वलोकानां निम्नगाः शुद्धिकारिकाः । सर्वपापहराः श्रेष्ठा मण्डले स्थापयाम्यहम् । ब्रह्मवरुणयोर्मध्ये अपः ॥२८॥ सुगंधिनश्च शैलाद्या मन्दं मंदवहाः सदा । तानहं स्थापयामीह मरुतो मंडले शुभे ॥ ब्रह्मवाय्वोर्मध्ये मरुतः ॥२९॥ पृथिव्या धार्यते विश्वं दुर्ग्रहं सागरैनरैः। अतस्त्वां स्थापयामीह ब्रह्मणो मंडले पदे । ब्रह्मणः पादमूलेपृथिवीम् ॥ ३० ॥ गंगे च यमुनेचैवगोदावरिसरस्वति । नर्मदेसिंधुकृष्णाय० ' से कृष्णका २४ तथा ब्रह्मा औरअग्निके बीच स्वधाका २५ ' मृत्युरोगा० ' से मृत्युरोगका २६ ' कुंकुमाभं०' से गणेशका २७ 'पावनाः० ' से जलका २८ 'सुगंधि०, से पवनका २९ 'पृथीव्या०'

कावेर्यौ मंडले स्थापयाम्यहम् ॥ ब्रह्मणः पादमूले नदीः ॥३१॥ समुद्राः सर्वतोयेषु श्रेष्ठा वै हरिवल्लभाः । मंडलेस्थापयामीहतान्नदीशान्सुखाप्तये ॥ ब्रह्मणः समन्तात्सप्त सागरान्--क्षारसागरं क्षीरसागरं दधिसा० घृतसा० इक्षुसा० सुरसा० स्वादूदकसा० ॥३२॥ तदुपरिमेरुंनाममंत्रेणपूर्वादिदिक्षु इंद्राणींस्वाहां प्रथमांनैर्ऋतिं वारुणीं वायवींकुबेर प्रियांरुद्राणीम्।पूर्वादिदिक्षु वज्रं शक्तिं दंडं खड्गं पाशमंकुशं गदां त्रिशूलम्॥३३॥पुनः पूर्वादिदिक्षु गजं मेषं महिषं शवं मकरं मृगं नरं वृषभम्॥३४॥ पुनः पूर्वादिदिक्षु ऐरावतं पुंडरीकं वामनं कुमुदमंजनं पुष्पदंतं सार्वभौमं सुप्रतीकम् ३५ । पुनः पूर्वादिचतुर्दिक्षु गणपतिं सप्तमातृः दुर्गां क्षेत्राधि-

से पृथ्वीका ३० 'गंगे च यमुने०' से नदियोंका ३१ 'समुद्रा०' से सातों समुद्रोंका स्थापन करे॥३२॥ इनके ऊपर पूर्वादि दिशाओंमें इन्द्राणी आदिका तथा वज्र शक्ति आदिका ३३ गजादिका ३४ ऐरावतादिका ३५ फिर पूर्वादि चारों दिशाओंमें गणपति आदिका

